SANSKRIT TEXT SOCIETY

श्रीगौतमधर्मशास्त्रम्

# THE INSTITUTES OF GAUTAMA

EDITED

WITH AN INDEX OF WORDS

BY

ADOLF FRIEDRICH STENZLER

PH. D., PROF. OF ORIENTAL LANGUAGES IN THE UNIVERSITY OF BRESLAU



LONDON

TRÜBNER & CO., 57 & 59, LUDGATE HILL

1876.

# PREFACE.

The edition of GAUTAMA's Institutes now published I have been enabled to prepare by the kindness of Professors COWELL and MAX MÜLLER and of Dr. REINHOLD ROST. To Professor COWELL I owe a copy of the Calcutta edition of the work; Prof. MAX MÜLLER gave me a copy of HARADATTA's commentary traced on transparent paper from the Devanâgarî copy in the Library of the India Office, and Dr. ROST allowed me the use of a Devanâgarî copy of the text, and of an excellent Telugu copy of HARADATTA's commentary, both belonging to the Library of the India Office. Several years before, I had copied a modern manuscript of the text belonging to the Royal Library of Berlin. After an examination of these materials I perceived that the surest way of criticism would be to give the text handed down by HARADATTA. This determination led to the exclusion of one chapter which the Calcutta edition and the manuscripts of the text insert after the 19th chapter of HARADATTA's text. It contains the doctrine of the *Karmavipâka* or the ripening of actions, and mentions the different bodies in which men will be born again as a punishment for their sins. It is to be remarked that VIJNÂNEÇVARA in his *Mitâksharâ* on YÂJNAVALKYA's Institutes (YÂJN. 3, 216, *Mitâksh.* III fol. 42a of the Calcutta edition of Samvat 1868) inserts a passage on the same subject ascribed to GAUTAMA, which, however, differs considerably from the said chapter of the manuscripts of GAUTAMA's text. HARADATTA omits this chapter, nor has COLEBROOKE considered it as belonging to the text of GAUTAMA, as he counts only twenty eight chapters instead of the twenty nine contained in the manuscript texts.

A difficulty arose from the comparison of the two manuscripts of HARADATTA's commentary above mentioned. They differ from each other in such a degree as to make them appear to present two different redactions of the same work. Nor do these two redactions seem to

have been the only ones HARADATTA'S commentary has undergone, since a quotation from it in the *Praudhamanoramâ* (AUFRECHT'S Catal. Msc. Sanscr. Bodl. p. 163a, note) does not occur in either of the two copies above mentioned. As, however, this question cannot be settled without the help of more manuscripts, I must leave it for future investigation. Under the present circumstances I felt no hesitation in choosing for my guide the Telugu copy, which by far surpasses the Devanâgarî one in correctness, and seldom if ever leaves a doubt as to the words of the text which the writer had in hand.

I must, however, mention here one instance in which I have, perhaps, put too much confidence in this guide. It is the passage GAUT. 1, 44, in which I have on the authority of the Telugu manuscript introduced into the text the strange word *srehu*, instead of which the manuscripts of the text read *retas*. The reading of the Telugu manuscript cannot be doubtful, since the form *srehu* is first used in the compound word of the text, followed afterwards by the explanation: *srehuḥ retas* and at last by the genetive plur. *srehûṇâm*. Dr. ROST has kindly informed me that a Grantha manuscript in the India Office Library (Msc. Burnell 57) reads *sreha*, which is as little known by the original dictionaries hitherto brought to light.

From Mr. BURNELL'S excellent edition of the *Sâmavidhâna Brâhmaṇa* (1, 2, 5) I learn that in GAUT. 26, 12 there should be written *namo 'hamâya* instead of *namo hamâya*, and accordingly the word *hama* in the Index will have to be replaced by *ahama*.

The publication of this edition has on the kind intercession of Prof. EGGELING been undertaken by the Sanskrit Text Society. In the correction of the press I have again to acknowledge the assistance of Dr. PISCHEL, now Professor in the University of Kiel. I beg to express my sincere thanks to all friends who contributed to the completion of the book.

In order to facilitate the understanding of the Law Book I am preparing a German translation which will be published separately.

BRESLAU, February 1876.

A. F. STENZLER.

## ॥ अथ गौतमीयं धर्मशास्त्रम् ॥

वेदो धर्ममूलम् । १ । तद्विदां च स्मृतिशीले । २ । दृष्टो धर्मव्यतिक्रमः साहसं च महतां न तु दृष्टार्थे अवरदौर्बल्यात् । ३ । तुल्यबलविरोधे विकल्पः । ४ । उपनयनं ब्राह्मणस्याष्टमे । ५ । नवमे पञ्चमे वा काम्यम् । ६ । गर्भादिः सङ्ख्या वर्षाणाम् । ७ । तद्द्वितीयं जन्म । ८ । तद्यस्मात्स आचार्यः । ९ । वेदानुवचनाच्च । १० । एकादशद्वादशयोः क्षत्रियवैश्ययोः । ११ । आ षोडशाद्ब्राह्मणस्यापतिता सावित्री । १२ । द्वाविंशते राजन्यस्य । १३ । द्व्यधिकाया वैश्यस्य । १४ । मौञ्जीज्यामौर्वीसौत्र्यो मेखलाः क्रमेण । १५ । कृष्णरुरुबस्ताजिनानि । १६ । वासांसि शाणक्षौमचीरकुतपाः सर्वेषाम् । १७ । कार्पासं चाविकृतम् । १८ । काषायमप्येके । १९ । वार्क्षं ब्राह्मणस्य । २० । माञ्जिष्ठहारिद्रे इतरयोः । २१ । बैल्वपालाशौ ब्राह्मणदण्डौ । २२ । आश्वत्थपैलवौ शेषे । २३ । यज्ञियो वा सर्वेषाम् । २४ । अपीडिता यूपवक्राः सशल्काः

। २५ । मूर्धललाटनासाग्रप्रमाणाः । २६ । मुण्डजटिलशिखा-
जटाश्च । २७ । द्रव्यहस्त उच्छिष्टो ऽनिधायाचामेत् । २८ ।
द्रव्यशुद्धिः परिमार्जनप्रदाहतक्षणनिर्णेजनानि तैजसमार्त्तिक-
दारवतान्तवानाम् । २९ । तैजसवदुपलमणिशङ्खशुक्तीनाम्
। ३० । दारुवदस्थिभूम्योः । ३१ । आवपनं च भूमेः । ३२ ।
चेलवद्रज्जुविदलचर्मणाम् । ३३ । उत्सर्गो वात्यन्तोपहता-
नाम् । ३४ । प्राङ्मुख उदङ्मुखो वा शौचमारभेत । ३५ । शु-
चौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या
मणिबन्धनात्पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाप
आचामेद्द्विः परिमृज्यात्पादौ चाभ्युक्षेत्खानि चोपस्पृशेच्छीर्ष-
ण्यानि मूर्धनि च दद्यात् । ३६ । सुप्त्वा भुक्त्वा क्षुत्वा च पुनः
। ३७ । दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात् । ३८ ।
प्राक्च्युतेरित्येके । ३९ । च्युतेष्वास्राववद्विद्यान्निगिरन्नेव तच्छु-
चिः । ४० । न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निप-
तन्ति । ४१ । लेपगन्धापकर्षणे शौचममेध्यस्य । ४२ । तदद्भिः
पूर्वं मृदा च । ४३ । मूत्रपुरीषस्नेहुविस्रंसनाभ्यवहारसंयोगेषु
च । ४४ । यत्र चाम्नायो विदध्यात् । ४५ । पाणिना सव्यमुप-
सङ्गृह्यानङ्गुष्ठमधीहि भो इत्यामन्त्रयेत गुरुम् । ४६ । तत्रचक्षुर्म-
नाः । ४७ । प्राणोपस्पर्शनं दर्भैः । ४८ । प्राणायामास्त्रयः पञ्च-
दशमात्राः । ४९ । प्राक्कूलेष्वासनं च । ५० । ओम्पूर्वा व्याहृतयः
पञ्च सत्यान्ताः । ५१ । गुरोः पादोपसङ्ग्रहणं प्रातः । ५२ । ब्र-
ह्मानुवचने चाद्यन्तयोः । ५३ । अनुज्ञात उपविशेत्प्राङ्मुखो द-
क्षिणतः शिष्य उदङ्मुखो वा । ५४ । सावित्री चानुवचनम्

। ५५ । आदितो ब्रह्मण आदाने । ५६ । ओङ्कारो ऽन्यत्रापि । ५७ । अन्तरागमने पुनरुपसदनम् । ५८ । श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्च । ५९ । प्राणायामा घृतप्राशनं चेतरेषाम् । ६० । श्मशानाभ्यध्ययने चैवं श्मशानाभ्यध्ययने चैवम् । ६१ ।

॥ इति गौतमीये धर्मशास्त्रे प्रथमो ऽध्यायः ॥ १ ॥

प्रागुपनयनात्कामचारवादभक्षो ऽहुताद्ब्रह्मचारी यथोपपादमूत्रपुरीषो भवति । १ । नास्याचमनकल्पो विद्यते ऽन्यत्रापमार्जनप्रधावनावोक्षणेभ्यः । २ । न तदुपस्पर्शनादाशौचम् । ३ । न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात् । ४ । न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात् । ५ । उपनयनादिर्नियमः । ६ । उक्तं ब्रह्मचर्यम् । ७ । अग्नीन्धनभैक्षचरणे सत्यवचनमपामुपस्पर्शनम् । ८ । एके गोदानादि । ९ । बहिःसन्ध्यत्वं च । १० । तिष्ठेत्पूर्वामासीतोत्तरां सज्योतिष्या ज्योतिषो दर्शनाद्वाग्यतः । ११ । नादित्यमीक्षेत । १२ । वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानि । १३ । गुरुदर्शने कण्ठप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि । १४ । निष्ठीवितहसितविजृम्भितावस्फोटनानि । १५ । स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायाम् । १६ । द्यूतं हीनसेवामदत्तादानं हिंसाम् । १७ । आचार्यतत्पुत्रस्त्रीदीक्षितनामानि । १८ । शुक्ला वाचः । १९ । मद्यं नित्यं ब्राह्मणः । २० । अधःशय्यासनी पूर्वोत्थायो जघन्यसंवेशी । २१ । वाग्बाहूदरसंयतः । २२ ।

नामगोत्रे गुरोः समानतो निर्दिशेत् । २३ । अर्चिते श्रेयसि चैवम् । २४ । शय्यासनस्थानानि विहाय प्रतिश्रवणम् । २५ । अभिक्रमणं वचनाददृष्टेन । २६ । अधःस्थानासनतिर्यग्वातसेवायां गुरुदर्शने चोत्तिष्ठेत् । २७ । गच्छन्तमनुव्रजेत्कर्म विज्ञाप्याख्याय ।२८। आहूताध्यायी ।२९। युक्तः प्रियहितयोः । ३० । तद्भार्यापुत्रेषु चैवम् । ३१ । नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्दनोपसङ्ग्रहणानि । ३२ । विप्रोष्योपसङ्ग्रहणं गुरुभार्याणाम् । ३३ । नैके युवतीनां व्यवहारप्राप्तेन । ३४ । सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जम् । ३५ । आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येण । ३६ । आचार्यज्ञातिगुरुस्वेष्वलाभे ऽन्यत्र ।३७। तेषां पूर्वं पूर्वं परिहरेत् । ३८ । निवेद्य गुरवे ऽनुज्ञातो भुञ्जीत । ३९ । असन्निधौ तद्भार्यापुत्रसब्रह्मचारिसद्भ्यः । ४० । वाग्यतस्तृप्यन्नलोलुप्यमानः सन्निधायोदकम् । ४१ । शिष्यशिष्टिरवधेन । ४२ । अशक्तौ रज्जुवेणुवदलाभ्यां तनुभ्याम् । ४३ । अन्येन घ्नन्राज्ञा शास्यः । ४४ । द्वादश वर्षाण्येकवेदे ब्रह्मचर्यं चरेत् । ४५ । प्रतिद्वादश वा सर्वेषु । ४६ । ग्रहणान्तं वा । ४७ । विद्यान्ते गुरुरर्थेन निमंत्र्यः । ४८ । कृत्वानुज्ञातस्य वा स्नानम् । ४९ । आचार्यः श्रेष्ठो गुरूणाम् । ५० । मातेत्येके मातेत्येके । ५१ ।

॥ इति गौतमीये धर्मशास्त्रे द्वितीयो ऽध्यायः ॥ २ ॥

तस्याश्रमविकल्पमेके ब्रुवते । १ । ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः । २ । तेषां गृहस्थो योनिरप्रजनत्वादितरेषाम् । ३ । तत्रोक्तं ब्रह्मचारिणः । ४ । आचार्याधीनत्वमान्तम् । ५ । गुरोः

कर्मशेषेण जपेत् ।६। गुर्वभावे तदपत्ये वृत्तिः ।७। तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा । ८ । एवंवृत्तो ब्रह्मलोकमवाप्नोति जितेन्द्रियः । ९ । इतरेषां चैतदविरोधि । १० । अनिचयो भिक्षुः । ११ । ऊर्ध्वरेताः । १२ । ध्रुवशीलो वर्षासु । १३ । भिक्षार्थी ग्राममियात् । १४ । जघन्यमनिवृत्तं चरेत् । १५ । निवृत्ताशीः । १६ । वाक्चक्षुःकर्मसंयतः । १७ । कौपीनाच्छादनार्थं वासो बिभृयात् । १८ । प्रहीणमेके निर्णिज्य । १९ । नाविप्रयुक्तमोषधिवनस्पतीनामङ्गमुपाददीत । २० । न द्वितीयामपर्तु रात्रिं ग्रामे वसेत् । २१ । मुण्डः शिखी वा । २२ । वर्जयेद्बीजवधम् । २३ । समो भूतेषु हिंसानुग्रहयोः । २४ । अनारम्भी । २५ । वैखानसो वने मूलफलाशी तपःशीलः । २६ । श्रामणकेनाग्निमाधाय । २७ । अग्राम्यभोजी । २८ । देवपितृमनुष्यभूतर्षिपूजकः । २९ । सर्वातिथिः प्रतिषिद्धवर्जम् । ३० । बैष्कमप्युपयुञ्जीत । ३१ । न फालकृष्टमधितिष्ठेत् । ३२ । ग्रामं च न प्रविशेत् । ३३ । जटिलश्चीराजिनवासाः । ३४ । नातिसांवत्सरं भुञ्जीत । ३५ । ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य गार्हस्थ्यस्य । ३६ ।

॥ इति गौतमीये धर्मशास्त्रे तृतीयो ऽध्यायः ॥ ३ ॥

गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् । १ । असमानप्रवरैर्विवाहः । २ । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः । ३ । बीजिनश्च । ४ । मातृबन्धुभ्यः पञ्चमात् । ५ । ब्राह्मो विद्याचारित्रबन्धुशीलसम्पन्नाय दद्यादाच्छाद्यालङ्कृताम् । ६ । संयोगमन्त्रः प्राजापत्ये सह धर्मश्चर्यतामिति । ७ । आर्षे गोमिथुनं

कन्यावते दद्यात् । ८ । अन्तर्वेद्यृत्विजे दानं दैवो ऽलङ्कृत्य । ९ । इच्छन्त्या स्वयं संयोगो गान्धर्वः । १० । वित्तेनानतिः स्त्रीमतामासुरः । ११ । प्रसह्यादानाद्राक्षसः । १२ । असंविज्ञातोपसङ्गमनात्पैशाचः । १३ । चत्वारो धर्म्याः प्रथमाः । १४ । षडित्येके । १५ । अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः । १६ । प्रतिलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः । १७ । ब्राह्मण्यजीजनत्पुत्रान्वर्णेभ्य आनुपूर्व्याद्ब्राह्मणसूतमागधचण्डालान् । १८ । तेभ्य एव क्षत्त्रिया मूर्धावसिक्तक्षत्त्रियधीवरपुल्कसान् । १९ । तेभ्य एव वैश्या भृज्यकण्ठमाहिष्यवैश्यवैदेहान् । २० । पारशवयवनकरणशूद्राञ्छूद्रेत्येके । २१ । वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन । २२ । पञ्चमेनाचार्याः । २३ । सृष्ट्यन्तरजानां च । २४ । प्रतिलोमास्तु धर्महीनाः । २५ । शूद्रायां च । २६ । असमानायां च शूद्रात्पतितवृत्तिः ।२७ । अन्त्यः पापिष्ठः । २८ । पुनन्ति साधवः पुत्राः । २९ । त्रिपुरुषमार्षात । ३० । दश दैवात् । ३१ । दशैव प्राजापत्यात् । ३२ । दश पूर्वान्दशापरानात्मानं च ब्राह्मीपुत्रो ब्राह्मीपुत्रः । ३३ ।

॥ इति गौतमीये धर्मशास्त्रे चतुर्थो ऽध्यायः ॥ ४ ।

ऋतावुपेयात् । १ । सर्वत्र वा प्रतिषिद्धवर्जम् । २ । देवपितृमनुष्यभूतर्षिपूजकः । ३ । नित्यस्वाध्यायः । ४ । पितृभ्यश्चोदकदानम् । ५ । यथोत्साहमन्यत् । ६ । भार्यादिरग्निर्दायादिर्वा । ७ । तस्मिन्गृह्याणि । ८ । देवपितृमनुष्ययज्ञाः स्वाध्यायश्च बलिकर्म । ९ । अग्नावग्निर्धन्वन्तरिर्विश्वे देवाः प्रजा-

पतिः स्विष्टकृदिति होमाः । १० । दिग्देवताभ्यश्च यथास्वम् । ११ । द्वार्षु मरुद्भ्यः । १२ । गृहदेवताभ्यः प्रविश्य । १३ । ब्रह्मणे मध्ये । १४ अद्भ्य उदकुम्भे । १५ । आकाशायेत्यन्तरिक्षे । १६ । नक्तञ्चरेभ्यश्च सायम । १७ स्वस्तिवाच्य भिक्षादानमप्पूर्वम् । १८ । ददातिषु चैवं धर्म्येषु । १९ । समद्विगुणसाहस्रानन्तानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः । २० । गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि । २१ । भिक्षमाणेषु कृतान्नमितरेषु । २२ । प्रतिश्रुत्याप्यधर्मसंयुक्ते न दद्यात् । २३ । क्रुद्धहृष्टभीतार्तलुब्धबालस्थविरमूढमत्तोन्मत्तवाक्यान्यनृतान्यपातकानि । २४ । भोजयेत्पूर्वमतिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविराञ्जघन्यांश्च । २५ । आचार्यपितृसखीनां तु निवेद्य पचनक्रिया । २६ । ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः । २७ । संवत्सरे पुनः । २८ । यज्ञविवाहयोरर्वाक् । २९ । राज्ञश्च श्रोत्रियस्य । ३० । अश्रोत्रियस्यासनोदके । ३१ । श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च प्रकारयेत् । ३२ । नित्यं वा संस्कारविशिष्टम् । ३३ । मध्यतोऽन्नदानमवैद्ये साधुवृत्ते । ३४ । विपरीते तु तृणोदकभूमि । ३५ । स्वागतमन्ततः । ३६ । पूजानत्याशश्च । ३७ । शय्यासनावसथानुव्रज्योपासनानि सदृक्छ्रेयसोः समानि । ३८ । अल्पशोऽपि हीने । ३९ । असमानग्रामोऽतिथिरैकरात्रिकोऽधिवृक्षसूर्योपस्थायी । ४० । कुशलानामयारोग्याणामनुप्रश्नः । ४१ । अन्त्यं शूद्रस्य । ४२ । ब्राह्मणस्यानतिथिरब्राह्मणोऽयज्ञे संवृत्तश्चेत्

। ४३ । भोजनं तु क्षत्रियस्योर्ध्वं ब्राह्मणेभ्यः । ४४ । अन्यान्भृत्यैः सहानृशंसार्थमानृशंसार्थम् । ४५ ।

॥ इति गौतमीये धर्मशास्त्रे पञ्चमो ऽध्यायः ॥ ५ ॥

पादोपसङ्ग्रहणं समवाये ऽन्वहम् । १ । अभिगम्य तु विप्रोष्य । २ । मातृपितृतद्बन्धूनां पूर्वजानां विद्यागुरूणां तद्गुरूणां च ।३। सन्निपाते परस्य ।४। स्वनाम प्रोच्याहमयमित्यभिवादो ऽज्ञसमवाये ।५। स्त्रीपुंयोगे ऽभिवादतो ऽनियममेके ।६। नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्याभगिनीनाम् ।७। नोपसङ्ग्रहणं भ्रातृभार्याणां श्वश्र्वाश्च ।८। ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानं नाभिवाद्याः ।९। तथान्यः पूर्वः पौरो ऽशीतिकावरः शूद्रो ऽप्यपत्यसमेन ।१०। अवरो ऽप्यार्यः शूद्रेण । ११ । नाम चास्य वर्जयेत् । १२ । राज्ञश्चाजपः प्रेष्यः । १३ । भो भवन्निति वयस्यः समाने ऽहनि जातः । १४ । दशवर्षवृद्धः पौरः । १५ । पञ्चभिः कलाभरः । १६ । श्रोत्रियश्चारणस्त्रिभिः । १७ । राजन्यवैश्यकर्मा विद्याहीनः । १८ । दीक्षितश्च प्राक्क्रयात् । १९ । वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि । २० । श्रुतं तु सर्वेभ्यो गरीयः । २१ । तन्मूलत्वाद्धर्मस्य । २२ । श्रुतेश्च । २३ । चक्रिदशमीस्थानुग्राह्यवधूस्नातकराजभ्यः पथो दानम् । २४ । राज्ञा तु श्रोत्रियाय श्रोत्रियाय । २५ ।

॥ इति गौतमीये धर्मशास्त्रे षष्ठो ऽध्यायः । ६ ॥

आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः । १ । अनुगमनं शुश्रूषा । २ । समाप्ते ब्राह्मणो गुरुः । ३ । याजनाध्या-

पनप्रतिग्रहाः सर्वेषाम् । ४ । पूर्वः पूर्वो गुरुः । ५ । तदलाभे क्षत्त्रियवृत्तिः । ६ । तदलाभे वैश्यवृत्तिः । ७ । तस्यापण्यम् । ८ । गन्धरसकृतान्नतिलशाणक्षौमाजिनानि । ९ । रक्तनिर्णिक्ते वाससी । १० । क्षीरं सविकारम् । ११ । मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि । १२ । पशवश्च हिंसासंयोगे । १३ । पुरुषवशाकुमारीवेहतश्च नित्यम् । १४ । भूमिव्रीहियवाजाव्यश्वऋषभधेन्वनडुहश्चैके । १५ । निमयस्तु । १६ । रसानां रसैः । १७ । पशूनां च । १८ । न लवणकृतान्नयोः । १९ । तिलानां च । २० । समेनामेन तु पक्कस्य सम्प्रत्यर्थे । २१ । सर्वथा तु वृत्तिरशक्तावशौद्रेण । २२ । तदप्येके प्राणसंशये । २३ । तद्वर्णसङ्कराभक्ष्यनियमस्तु । २४ । प्राणसंशये ब्राह्मणो ऽपि शस्त्रमाददीत । २५ । राजन्यो वैश्यकर्म वैश्यकर्म । २६ ।

॥ इति गौतमीये धर्मशास्त्रे सप्तमो ऽध्यायः ॥ ७ ॥

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः । १ । तयोश्चतुर्विधस्य मनुष्यजातस्यान्तःसञ्ज्ञानां चलनपतनसर्पाणामायत्तं जीवनम् । २ । प्रसूतिरक्षणमसङ्करो धर्मः । ३ । स एष बहुश्रुतो भवति । ४ । लोकवेदवेदाङ्गवित् । ५ । वाकोवाक्येतिहासपुराणकुशलः । ६ । तदपेक्षस्तद्वृत्तिः । ७ । चत्वारिंशता संस्कारैः संस्कृतः । ८ । त्रिषु कर्मस्वभिरतः । ९ । षट्सु वा । १० । सामयाचारिकेष्वभिविनीतः । ११ । षड्भिः परिहार्यो राज्ञा । १२ । अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति । १३ । गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम् । १४ । चत्वारि वेदव्रतानि । १५ । स्नानं सहधर्मचारि

णीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणाम् । १६ । एतेषां च । १७ । अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः । १८ । अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । १९ । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्थाः । २० । इत्येते चत्वारिंशत्संस्काराः । २१ । अथाष्टावात्मगुणाः । २२ । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति । २३ । यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति । २४ । यस्य तु खलु चत्वारिंशत्संस्काराणामेकदेशो ऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति गच्छति । २५ ।

॥ इति गौतमीये धर्मशास्त्रे ऽष्टमो ऽध्यायः ॥ ८ ॥

स विधिपूर्वं स्नात्वा भार्यामधिगम्य यथोक्तान्गृहस्थधर्मान्प्रयुञ्जान इमानि व्रतान्यनुकर्षेत् । १ । नित्यं शुचिः सुगन्धः स्नानशीलः । २ । सति विभवे न जीर्णमलवद्वासाः स्यात् । ३ । न रक्तमुल्बणमन्यधृतं वासो बिभृयात् । ४ । न स्रगुपानहौ । ५ । निर्णिक्तमशक्तौ । ६ । न रूढश्मश्रुरकस्मात् । ७ । नाग्निमपश्च युगपद्धारयेत् । ८ । नाञ्जलिना पिबेत् । ९ । न तिष्ठन्नुद्धृतोदकेनाचामेत् । १० । न शूद्राशुच्येकपाण्यावर्जितेन । ११ । न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रति पश्यन्वा मूत्रपुरीषामेध्यानि व्युदस्येत् । १२ । नैता देवताः प्रति

पादौ प्रसारयेत् । १३ । न पर्णलोष्टाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात् । १४ । न भस्मकेशतुषकपालामेध्यान्यधितिष्ठेत् । १५ । न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत । १६ । सम्भाष्य पुण्यकृतो मनसा ध्यायेत् ।१७। ब्राह्मणेन वा सह सम्भाषेत ।१८। अधेनुं धेनुभव्येति ब्रूयात् । १९ । अभद्रं भद्रमिति । २० । कपालं भगालमिति । २१ । मणिधनुरितीन्द्रधनुः । २२ । गां धयन्तीं परस्मै नाचक्षीत । २३ । न चैनां वारयेत् । २४ । न मिथुनीभूत्वा शौचं प्रति विलम्बेत । २५ । न च तस्मिञ्छयने स्वाध्यायमधीयीत । २६ । न चापररात्रमधीत्य पुनः प्रतिसंविशेत् । २७ । नाकल्यां नारीमभिरमयेत् । २८ । न रजस्वलाम् ।२९। न चैनां श्लिष्येत् । ३० । न कन्याम् । ३१ । अग्निमुखोपधमनविगृह्यवादबहिर्गन्धमाल्यधारणपापीयसावलेखनभार्यासहभोजनाञ्जन्त्यवेक्षणकुद्वारप्रवेशनपादपादधावनासन्दीस्थभोजननदीबाहुतरणवृक्षविषमारोहणावरोहणप्राणव्यायच्छनानि च वर्जयेत् । ३२ । न सन्दिग्धां नावमधिरोहेत् । ३३ । सर्वत एवात्मानं गोपायेत् । ३४ । न प्रावृत्य शिरोऽहनि पर्यटेत् । ३५ । प्रावृत्य तु रात्रौ । ३६ । मूत्रोच्चारे च । ३७ । न भूमावनन्तर्धाय । ३८ । नाराच्चावसथात् । ३९ । न भस्मकरीषकृष्टच्छायापथिकाम्येषु । ४० । उभे मूत्रपुरीषे दिवा कुर्यादुदङ्मुखः । ४१ । सन्ध्ययोश्च । ४२ । रात्रौ तु दक्षिणामुखः । ४३ । पालाशमासनं पादुके दन्तधावनमिति च वर्जयेत् । ४४ । सोपानत्कश्चाशनासनाभिवादननमस्कारान्वर्जयेत् । ४५ । न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थका-

2*

मेभ्यः । ४६ । तेषु तु धर्मोत्तरः स्यात् । ४७ । न नग्नां परयोषितमीक्षेत । ४८ । न पदासनमाकर्षेत् । ४९ । न शिश्नोदरपाणिपादवाक्चक्षुश्चापलानि कुर्यात् । ५० । छेदनभेदनविलेखनविमर्दनावस्फोटनानि नाकस्मात्कुर्यात् । ५१ । नोपरि वत्सतन्तीं गच्छेत् । ५२ । न कुलङ्कुलः स्यात् । ५३ । न यज्ञमवृतो गच्छेत् । ५४ । दर्शनाय तु कामम् । ५५ । न भक्ष्यानुत्सङ्गे भक्षयेत् । ५६ । न रात्रौ प्रेष्याहृतम् । ५७ । उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चात्तवीर्याणि नाश्नीयात् । ५८ । सायम्प्रातस्त्वन्नमभिपूजितमनिन्दन्भुञ्जीत । ५९ । न कदाचिद्रात्रौ नग्नः स्वपेत् । ६० । स्नायाद्वा । ६१ । यत्रात्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत्समाचरेत् । ६२ । योगक्षेमार्थमीश्वरमधिगच्छेत् । ६३ । नान्यमन्यत्र देवगुरुधार्मिकेभ्यः । ६४ । प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्यजनभूयिष्ठमनलससमृद्धं धार्मिकाधिष्ठितं निकेतनमावसितुं यतेत । ६५ । प्रशस्तमङ्गल्यदेवतायतनचतुष्पथादीन्प्रदक्षिणमावर्तेत । ६६ । मनसा वा समग्रमाचारमनुपालयेदापत्कल्पः । ६७ । सत्यधर्मा । ६८ । आर्यवृत्तः । ६९ । शिष्टाध्यापकः । ७० । शौचशिष्टः । ७१ । श्रुतिनिरतः स्यात् । ७२ । नित्यमहिंस्रो मृदुर्दृढकारी दमदानशीलः । ७३ । एवमाचारो मातापितरौ पूर्वापरान्सम्बन्धान्दुरितेभ्यो मोक्षयिष्यन्स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते न च्यवते । ७४ ।

॥ इति गौतमीये धर्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

द्विजातीनामध्ययनमिज्या दानम् । १ । ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः । २ । पूर्वेषु नियमस्तु । ३ । आचार्यज्ञातिप्रियगुरुधनविद्यानिमयेषु ब्रह्मणः सम्प्रदानमन्यत्र यथोक्तात् । ४ । कृषिवाणिज्ये चास्वयङ्कृते । ५ । कुसीदं च । ६ । राज्ञो ऽधिकं रक्षणं सर्वभूतानाम् । ७ । न्याय्यदण्डत्वम् । ८ । बिभृयाद्ब्राह्मणाञ्छ्रोत्रियान् । ९ । निरुत्साहांश्चाब्राह्मणान् । १० । अकरांश्च । ११ । उपकुर्वाणांश्च । १२ । योगश्च विजये । १३ । भये विशेषेण । १४ । चर्या च रथधनुर्भ्याम् । १५ । सङ्ग्रामे संस्थानमनिवृत्तिश्च । १६ । न दोषो हिंसायामाहवे । १७ । अन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः । १८ । क्षत्रियश्चेदन्यस्तमुपजीवेत्तद्वृत्त्या । १९ । जेता लभेत साङ्ग्रामिकं वित्तम् । २० । वाहनं तु राज्ञः । २१ । उद्धारश्चपार्थग्जये । २२ । अन्यत्तु यथार्हं भाजयेद्राजा । २३ । राज्ञे बलिर्दानं कर्षकैर्दशममष्टमं षष्ठं वा । २४ । पशुहिरण्ययोरप्येके पञ्चाशद्भागः । २५ । विंशतिभागः शुल्कः पण्ये । २६ । मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षष्ठ्यः । २७ । तद्रक्षणधर्मित्वात् । २८ । तेषु नित्ययुक्तः स्यात् । २९ । अधिकेन वृत्तिः । ३० । शिल्पिनो मासि मास्येकैकं कर्म कुर्युः । ३१ । एतेनात्मोपजीविनो व्याख्याताः । ३२ । नौचक्रीवन्तश्च । ३३ । भक्तं तेभ्यो दद्यात् । ३४ । पण्यं वणिग्भिरर्घापचयेन देयम् । ३५ । प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । ३६ । विख्याप्य राज्ञा संवत्सरं रक्ष्यम् । ३७ । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः । ३८ । स्वामी

रिक्थक्रयसंविभागपरिग्रहाधिगमेषु । ३९ । ब्राह्मणस्याधिकं लब्धम् । ४० । क्षत्रियस्य विजितम् । ४१ । निर्विष्टं वैश्यशूद्रयोः । ४२ । निध्यधिगमो राजधनम् । ४३ । न ब्राह्मणस्याभिरूपस्य । ४४ । अब्राह्मणो ऽप्याख्याता षष्ठं लभेतेत्येके । ४५ । चोरहृतमवजित्य यथास्थानं गमयेत् । ४६ । कोशाद्वा दद्यात् । ४७ । रक्ष्यं बालधनमा व्यवहारप्रापणात्समावृत्तेर्वा । ४८ । वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यकुसीदम् । ४९ । शूद्रश्चतुर्थो वर्ण एकजातिः । ५० । तस्यापि सत्यमक्रोधः शौचम् । ५१ । आचमनार्थे पाणिपादप्रक्षालनमित्येके । ५२ । श्राद्धकर्म । ५३ । भृत्यभरणम् । ५४ । स्वदारवृत्तिः । ५५ । परिचर्या चोत्तरेषाम् । ५६ । तेभ्यो वृत्तिं लिप्सेत । ५७ । जीर्णान्युपानच्छत्रवासःकूर्चानि । ५८ । उच्छिष्टाशनम् । ५९ । शिल्पवृत्तिश्च । ६० । यं चार्यमाश्रयीत भर्तव्यस्तेन क्षीणो ऽपि । ६१ । तेन चोत्तरः । ६२ । तदर्थो ऽस्य निचयः स्यात् । ६३ । अनुज्ञातो ऽस्य नमस्कारो मन्त्रः । ६४ । पाकयज्ञैः स्वयं यजेतेत्येके । ६५ । सर्वे चोत्तरोत्तरं परिचरेयुः । ६६ । आर्यानार्ययोर्व्यतिक्षेपे कर्मणः साम्यं साम्यम । ६७ ।

॥ इति गौतमीये धर्मशास्त्रे दशमो ऽध्यायः ॥ १० ॥

राजा सर्वस्येष्टे ब्राह्मणवर्जम् । १ । साधुकारी स्यात्साधुवादी । २ । त्रय्यामान्वीक्षिक्यां चाभिविनीतः । ३ । शुचिर्जितेन्द्रियो गुणवत्सहायोपायसम्पन्नः । ४ । समः प्रजासु स्यात् । ५ । हितं चासां कुर्वीत । ६ । तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः । ७ । ते ऽप्येनं मन्येरन् । ८ । वर्णानाश्रमांश्च

न्यायतो ऽभिरक्षेत् । ९ । चलतश्चैनान्स्वधर्मे स्थापयेत् । १० । धर्मस्य ह्यंशभाग्भवतीति विज्ञायते । ११ । ब्राह्मणं च पुरो दधीत विद्याभिजनवाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनम् । १२ । तत्प्रसूतः कर्माणि कुर्वीत । १३ । ब्रह्मप्रसूतं हि क्षत्त्रमृध्यते न व्यथत इति विज्ञायते । १४ । यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत । १५ । तदधीनमपि ह्येके योगक्षेमं प्रतिजानते । १६ । शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात् । १७ । यथोक्तमृत्विजो ऽन्यानि । १८ । तस्य व्यवहारो वेदो धर्मशास्त्राण्यङ्गानि पुराणम् । १९ । देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् । २० । कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे । २१ । तेभ्यो यथाधिकारमर्थान्प्रत्यवहृत्य धर्मव्यवस्था । २२ । न्यायाधिगमे तर्को ऽभ्युपायः । २३ । तेनाभ्यूह्य यथास्थानं गमयेत् । २४ । विप्रतिपत्तौ त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत् । २५ । तथा ह्यस्य निःश्रेयसं भवतीति । २६ । ब्रह्म क्षत्त्रेण पृक्तं देवपितृमनुष्यान्धारयतीति विज्ञायते । २७ । दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत् । २८ । वर्णा आश्रमाश्च स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रपद्यन्ते । २९ । विष्वञ्चो विपरीता नश्यन्ति । ३० । तानाचार्योपदेशो दण्डश्च पालयते । ३१ । तस्माद्राजाचार्यावनिन्द्यावनिन्द्यौ । ३२ ।

॥ इति गौतमीये धर्मशास्त्र एकादशो ऽध्यायः ॥ ११ ॥

शूद्रो द्विजातीनतिसन्धायाभिहत्य वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यात् । १ । आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं च । २ । गोप्ता चेद्वधो ऽधिकः । ३ । अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । ४ । उदाहरणे जिह्वाच्छेदः । ५ । धारणे शरीरभेदः । ६ । आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः । ७ । शतं क्षत्त्रियो ब्राह्मणाक्रोशे । ८ । दण्डपारुष्ये द्विगुणम् ।९। अध्यर्धं वैश्यः ।१०। ब्राह्मणस्तु क्षत्त्रिये पञ्चाशत् ।११। तदर्धं वैश्ये ।१२। न शूद्रे किञ्चित् ।१३। ब्राह्मणराजन्यवत्क्षत्त्रियवैश्यौ ।१४। अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य ।१५। द्विगुणोत्तराणीतरेषां प्रतिवर्णम् ।१६। विदुषो ऽतिक्रमे दण्डभूयस्त्वम् ।१७। फलहरितधान्यशाकादाने पञ्चकृष्णलमल्पे । १८ । पशुपीडिते स्वामिदोषः । १९ । पालसंयुक्ते तु तस्मिन् ।२०। पथि क्षेत्रे ऽनावृते पालक्षेत्रिकयोः ।२१। पञ्च माषा गवि । २२ । षडुष्ट्रखरे । २३ । अश्वमहिषयोर्दश । २४ । अजाविषु द्वौ द्वौ । २५ । सर्वविनाशे शदः । २६ । शिष्टाकरणे प्रतिषिद्धसेवायां च नित्यं चेलपिण्डादूर्ध्वं स्वहरणम् । २७ । गो ऽग्न्यर्थे तृणमेधान्वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम् । २८ । कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषकी मासम् । २९ । नातिसांवत्सरीमेके । ३० । चिरस्थाने द्वैगुण्यं प्रयोगस्य । ३१ । भुक्ताधिर्न वर्धते । ३२ । दित्सतो ऽवरुद्धस्य च । ३३ । चक्रकालवृद्धिः । ३४ । कारिताकायिकाशिखाधिभोगाश्च । ३५ । कुसीदं पशूपजलोमक्षेत्रशदवाह्येषु नातिपञ्चगुणम् । ३६ ।

अजडापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः ।३७। न श्रोत्रियप्रव्रजितराजन्यपुरुषैः ।३८। पशुभूमिस्त्रीणामनतिभोगः ।३९। रिक्थभाज ऋणं प्रतिकुर्युः ।४०। प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डा न पुत्रानध्याभवेयुः ।४१। निध्यन्वाधियाचितावक्रीताधयो नष्टाः सर्वाननिन्दितानपुरुषापराधेन ।४२। स्तेनः प्रकीर्णकेशो मुसली राजानमियात्कर्माचक्षाणः ।४३। पूतो वधमोक्षाभ्याम् ।४४। अघ्नन्नेनस्वी राजा ।४५। न शारीरो ब्राह्मणदण्डः ।४६। कर्मवियोगविख्यापनविवासनाङ्ककरणानि ।४७। अवृत्तौ प्रायश्चित्ती सः ।४८। चोरसमः सचिवो मतिपूर्वे ।४९। प्रतिग्रहीताप्यधर्मसंयुक्ते ।५०। पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः ।५१। अनुज्ञानं वा वेदवित्समवायवचनाद्वेदवित्समवायवचनात् ।५२।

॥ इति गौतमीये धर्मशास्त्रे द्वादशो ऽध्यायः ॥ १२ ॥

विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था ।१। बहवः स्युरनिन्दिताः स्वकर्मसु प्रात्ययिका राज्ञा निष्प्रीत्यनभितापाश्चान्यतरस्मिन् ।२। अपि शूद्राः ।३। ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्यो ऽनिबद्धश्चेत् ।४। नासमवेता अपृष्टाः प्रब्रूयुः ।५। अवचने च दोषिणः स्युः ।६। स्वर्गः सत्यवचने विपर्यये नरकः ।७। अनिबद्धैरपि वक्तव्यम् ।८। न पीडाकृते निर्बन्धः ।९। प्रमादोक्ते च ।१०। साक्षिसभ्यराजकर्तृषु दोषो धर्मतन्त्रपीडायाम् ।११। शपथेनैके सत्यकर्म ।१२। तद्देवराजब्राह्मणसंसदि स्यादब्राह्मणानाम् ।१३। क्षुद्रपश्वनृते साक्षी दश हन्ति ।१४। गोऽश्वपुरुषभूमिषु दशगुणोत्तरान् ।१५। सर्वं

वा भूमौ । १६ । हरणे नरकः । १७ । भूमिवदप्सु । १८ । मैथुनसंयोगे च । १९ । पशुवन्मधुसर्पिषोः । २० । गोवत्रवस्त्रहिरण्यधान्यब्रह्मसु । २१ । यानेष्वश्ववत् । २२ । मिथ्यावचने याप्यो दण्ड्यश्च साक्षी । २३ । नानृतवचने दोषो जीवनं चेत्तदधीनम् । २४ । न तु पापीयसो जीवनम् । २५ । राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित् । २६ । प्राड्विवाकमध्याभवेत् । २७ । संवत्सरं प्रतीक्षेताप्रतिभायाम् । २८ । धेन्वनडुत्स्त्रीप्रजननसंयुक्ते च शीघ्रम् । २९ । आत्ययिके च । ३० । सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनं सत्यवचनम् । ३१ ।

॥ इति गौतमीये धर्मशास्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानाम् । १ । एकादशरात्रं क्षत्रियस्य । २ । द्वादशरात्रं वैश्यस्य । ३ । अर्धमासमेके । ४ । मासं शूद्रस्य । ५ । तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन् । ६ । रात्रिशेषे द्वाभ्याम् । ७ । प्रभाते तिसृभिः । ८ । गोब्राह्मणहतानामन्वक्षम् । ९ । राजक्रोधाच्च । १० । युद्धे । ११ । प्रायानाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम् । १२ । पिण्डनिवृत्तिः सप्तमे पञ्चमे वा । १३ । जननेऽप्येवम् । १४ । मातापित्रोस्तत् । १५ । मातुर्वा । १६ । गर्भमाससमरात्रीः स्रंसने गर्भस्य । १७ । त्र्यहं वा । १८ । श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीम् । १९ । असपिण्डे योनिसम्बन्धे सहाध्यायिनि च । २० । सब्रह्मचारिण्येकाहम् । २१ । श्रोत्रिये चोपसम्पन्ने । २२ । प्रेतोपस्पर्शने दशरात्रमाशौचमभिसन्धाय चेत् । २३ । उक्तं वैश्यशूद्रयोः । २४ । आर्तवीर्वा । २५ ।

पूर्वयोश्च । २६ । त्र्यहं वा । २७ । आचार्यतत्पुत्रस्त्रीयाज्यशि-ष्येषु चैवम् । २८ । अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वावरं तत्र शवोक्तमाशौचम् । २९ । पतितचण्डालसूतिकोदक्याश-वस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येत् । ३० । शवानुगमने च । ३१ । शुनश्च । ३२ । यदुपहन्यादित्येके । ३३ । उदकदानं सपिण्डैः कृतजटस्य । ३४ । तत्स्त्रीणां च । ३५ । एके प्रत्तानाम् । ३६ । अधःशय्यासनिनो ब्रह्मचारिणः सर्वे । ३७ । न मार्जयीरन् । ३८ । न मांसं भक्षयेयुराप्रदानात् । ३९ । प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया । ४० । वास-सां च त्यागः । ४१ । अन्त्ये त्वन्त्यानाम् । ४२ । दन्तजन्मादि मातापितृभ्याम् । ४३ । बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यः शौचम् । ४४ । राज्ञां च कार्यविरोधात् । ४५ । ब्राह्म-णस्य च स्वाध्यायानिवृत्त्यर्थं स्वाध्यायानिवृत्त्यर्थम् । ४६ ।

॥ इति गौतमीये धर्मशास्त्रे चतुर्दशो ऽध्यायः ॥ १४ ॥

अथ श्राद्धम् । १ । अमावास्यायां पितृभ्यो दद्यात् । २ । पञ्चमीप्रभृति वापरपक्षस्य । ३ । यथाश्राद्धं सर्वस्मिन्वा । ४ । द्रव्यदेशब्राह्मणसन्निधाने वाकालनियमः । ५ । शक्तितः प्रकर्षेद्गुणसंस्कारविधिनान्नस्य । ६ । नवावरान्भोजयेदयुजः । ७ । यथोत्साहं वा । ८ । श्रोत्रियान्वाग्रूपवयःशीलसम्पन्नान् । ९ । युवभ्यो दानं प्रथमम् । १० । एके पितृवत् । ११ । न च तेन मित्रकर्म कुर्यात् । १२ । पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः । १३ । तदभाव ऋत्विगाचार्यौ । १४ । तिल-माषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति । मत्स्यहरिणरु-

रुशशकूर्मवराहमेषमांसैः संवत्सराणि।गव्यपयःपायसैर्द्वादश वर्षाणि । वार्ध्रीणसेन मांसेन कालशाकच्छागलोहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम् । १५ । न भोजयेत्स्तेनक्लीबपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषूदिधिषूपतिस्त्रीग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकुचरकूटसाक्षिप्रातिहारिकान् । १६ । उपपतिर्यस्य च । १७ । कुण्डाशिसोमविक्रय्यगारदाहिगरदावकीर्णिगणप्रेष्यागम्यागामिहिंस्रपरिवित्तपरिवेत्तृपर्याहितपर्याधातृत्यक्तात्मदुर्वालकुनखिश्यावदच्छ्वित्रिपौनर्भवकितवाजपराजप्रेष्यप्रातिरूपिकशूद्रापतिनिराकृतिकिलासिकुसीदिवणिक्शिल्पोपजीविज्यावादित्रतालनृत्तगीतशीलान् ।१८। पित्रा चाकामेन विभक्तान् । १९ । शिष्यांश्चैके सगोत्रांश्च । २० । भोजयेदूर्ध्वं त्रिभ्यो गुणवन्तं । २१ । सद्यःश्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयति पितॄन् । २२ । तस्मात्तदहर्ब्रह्मचारी स्यात् । २३ । श्वचण्डालपतितावेक्षणे दुष्टम् । २४ । तस्मात्परिश्रिते दद्यात् । २५ । तिलैर्वा विकिरेत् । २६ । पङ्क्तिपावनो वा शमयेत् । २७ । पङ्क्तिपावनः षडङ्गविज्ज्येष्ठसामगस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः पञ्चाग्निः स्नातको मन्त्रब्राह्मणविद्धर्मज्ञो ब्रह्मदेयानुसन्तान इति । २८ । हविःषु चैवम् । २९ । दुर्वालादीञ्छ्राद्ध एवैके श्राद्ध एवैके । ३० ।

॥ इति गौतमीये धर्मशास्त्रे पञ्चदशो ऽध्यायः । १५ ॥

श्रवणादि वार्षिकं प्रोष्ठपदीं वोपाकृत्याधीयीत छन्दांसि । १ । अर्धपञ्चमान्मासान्पञ्च दक्षिणायनं वा । २ । ब्रह्मचार्युत्सृष्टलोमा न मांसं भुञ्जीत । ३ । द्वैमास्यो वा नियमः

। ४ । नाधीयीत वायौ दिवा पांसुहरे । ५ । कर्णश्राविणि न-
क्तम् । ६ । वाणभेरीमृदङ्गगर्तार्तशब्देषु । ७ । श्वशृगालगर्दभ-
संह्रादे । ८ । लोहितेन्द्रधनुर्नीहारेषु । ९ । अभ्रदर्शने चापर्तौ
। १० । मूचित उच्चारितः । ११ । निशासन्ध्योदकेषु । १२ । व-
र्षति च । १३ । एके वलीकसन्तानम् । १४ आचार्यपरिवेषणे
। १५ । ज्योतिषोश्च । १६ । भीतो यानस्थः शयानः प्रौढपादः
। १७ । श्मशानग्रामान्तमहापथाशौचेषु । १८ । पूतिगन्धान्तः-
शवदिवाकीर्त्यशूद्रसन्निधाने । १९ । शुक्तके चोद्गारे । २० । ऋ-
ग्यजुषं च सामशब्दो यावत् । २१ । आकालिका निर्घातभू-
मिकम्पराहुदर्शनोल्काः । २२ । स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृ-
तास्मिषु । २३ । अपर्तौ । २४ । विद्युति नक्तं चापरराचात्
। २५ । चिभागादिप्रवृत्तौ सर्वम् । २६ । उल्का विद्युत्समेत्ये-
केषाम् । २७ । स्तनयित्नुरपराह्णे । २८ । अपि प्रदोषे । २९ ।
सर्वं नक्तमाधरराचात् । ३० । अहश्चेत्सज्योतिः । ३१ । विषय-
स्थे च राज्ञि प्रेते । ३२ । विप्रोष्य चान्योन्येन सह । ३३ । स-
ङ्कुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोराचम्
। ३४ । अमावास्यायां च । ३५ । द्व्यहं वा । ३६ । कार्त्तिकी
फाल्गुन्याषाढी पौर्णमासी । ३७ । तिस्रो ऽष्टकास्त्रिराचम्
। ३८ । अन्त्यामेके । ३९ । अभितो वार्षिकम् । ४० । सर्वे
वर्षविद्युत्स्तनयित्नुसन्निपाते । ४१ । प्रस्यन्दिनि । ४२ । ऊर्ध्वं
भोजनादुत्सवे । ४३ । प्राधीतस्य च निशायां चतुर्मुहूर्तम् । ४४ ।
नित्यमेके नगरे । ४५ । मानसमप्यशुचिः । ४६ । श्राद्धिनामा-

कालिकम् । ४७ । अकृतान्नश्राद्धिकसंयोगे च ।४८। प्रतिविद्यं च यान्स्मरन्ति स्मरन्ति । ४९ ।

॥ इति गौतमीये धर्मशास्त्रे षोडशो ऽध्यायः ॥ १६ ॥

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत । १ । प्रतिगृह्णीयाच्च । २ । एधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनावसथयानपयोदधिधानाशफरिप्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि सर्वेषाम् । ३ । पितृदेवगुरुभृत्यभरणे चान्यत् । ४ । वृत्तिश्चेन्नान्तरेण शूद्रात् । ५ । पशुपालक्षेत्रकर्षककुलसङ्गतकारयितृपरिचारका भोज्यान्नाः । ६ । वणिक्चाशिल्पी । ७ । नित्यमभोज्यम् । ८ । केशकीटावपन्नम् । ९ । रजस्वलाकृष्णशकुनिपदोपहतम् । १० । भ्रूणघ्ना प्रेक्षितम् । ११ । गवोपघ्रातम् । १२ । भावदुष्टम् । १३ । शुक्तं केवलमदधि । १४ । पुनः सिद्धम् । १५ । पर्युषितमशाकभक्ष्यस्नेहमांसमधूनि ।१६। उत्सृष्टपुंश्चल्यभिशस्तानपदेश्यदण्डिकतक्षकदर्यबन्धनिकचिकित्सकमृगय्वनिषुचार्युच्छिष्टभोजिगणविद्विषाणानाम् । १७ । अपाङ्क्त्यानां प्राग्दुर्वालात् ।१८। वृथान्नाचमनोत्थानव्यपेतानि ।१९। समासमाभ्यां विषमसमे पूजातः ।२०। अनर्चितं च ।२१। गोश्च क्षीरमनिर्दशायाः सूतके । २२ । अजामहिष्योश्च । २३ । नित्यमाविकमपेयमौष्ट्रमैकशफं च । २४ । स्यन्दिनीयमसूसन्धिनीनां च । २५ । विवत्सायाश्च । २६ । पञ्चनखाश्चाशल्यकशशश्वाविड्गोधाखड्गकच्छपाः ।२७। उभयतोदत्केश्यलोमैकशफकलविङ्कप्लवचक्रवाकहंसाः । २८ । काककङ्कगृध्रश्येना जलजा रक्तपादतुण्डा ग्राम्यकुक्कुटसूकरौ । २९ । धेन्वनडुहौ च ।३०।

अपन्नदावसन्नवृथामांसानि । ३१ । किसलयक्याकुलशुननिर्यासाः । ३२ । लोहिता व्रश्चनाश्च । ३३ । निचुदारुबकबलाकशुकमद्गुटिट्टिभमान्धाला नक्तञ्चरा अभक्ष्याः ।३४। भक्ष्याः प्रतुदविष्किराजालपादाः । ३५ । मत्स्याश्चाविकृताः । ३६ । वध्याश्च धर्मार्थे । ३७ । व्यालहतादृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीतोपयुञ्जीत । ३८ ।

॥ इति गौतमीये धर्मशास्त्रे सप्तदशो ऽध्यायः ॥ १७ ॥

अस्वतन्त्रा धर्मे स्त्री । १ । नातिचरेद्भर्तारम् । २ । वाक्चक्षुःकर्मसंयता । ३ । अपतिरपत्यलिप्सुर्देवरात् । ४ । गुरुप्रसूता नर्तुमतीयात् । ५ । पिण्डगोत्रऋषिसम्बन्धेभ्यो योनिमात्राद्वा । ६ । नादेवरादित्येके । ७ । नातिद्वितीयम् । ८ । जनयितुरपत्यम् । ९ । समयादन्यत्र । १० । जीवतश्च क्षेत्रे । ११ । परस्मात्तस्य । १२ । द्वयोर्वा । १३ । रक्षणात्तु भर्तुरेव । १४ । नष्टे भर्तरि षड्वार्षिकं क्षपणं श्रूयमाणे ऽभिगमनम् । १५ । प्रव्रजिते तु निवृत्तिः प्रसङ्गात् । १६ । द्वादश वर्षाणि ब्राह्मणस्य विद्यासम्बन्धे । १७ । भ्रातरि चैवं ज्यायसि यवीयान्कन्याग्न्युपयमेषु । १८ । षडित्येके । १९ । त्रीन्कुमार्यृतूनतीत्य स्वयं युञ्जीतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् । २० । प्रदानं प्रागृतोः । २१ । अप्रयच्छन्दोषी । २२ । प्राग्वासःप्रतिपत्तेरित्येके । २३ । द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रात् । २४ । अन्यत्रापि शूद्राद्बहुपशोर्हीनकर्मणः । २५ । शतगोरनाहिताग्नेः । २६ । सहस्रगोश्चासोमपात् । २७ । सप्तमीं चाभुक्त्वानिचयाय । २८ । अप्यहीनकर्मभ्यः । २९ । आचक्षीत राज्ञा

पृष्टः । ३० । तेन हि भर्तव्यः श्रुतशीलसम्पन्नश्चेत् । ३१ । धर्मतन्त्रपीडायां तस्याकरणे दोषो दोषः । ३२ ।

॥ इति गौतमीये धर्मशास्त्रे ऽष्टादशो ऽध्यायः ॥ १८ ॥

उक्तो वर्णधर्म आश्रमधर्मश्च । १ । अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते यथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति । २ । तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते । ३ । न कुर्यादित्याहुः । ४ । न हि कर्म क्षीयत इति । ५ । कुर्यादित्यपरम् । ६ । पुनःस्तोमेनेष्ट्वा पुनः सवनमायन्तीति विज्ञायते । ७ । व्रात्यस्तोमैश्चेष्ट्वा । ८ । तरति सर्वं पाप्मानं तरति ब्रह्महत्यां यो ऽश्वमेधेन यजत इति च । ९ । अग्निष्टुताभिशस्यमानं याजयेदिति च । १० । तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम् । ११ । उपनिषदो वेदान्ताः सर्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्वशिरो रुद्राः पुरुषसूक्तं राजनरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यं ज्येष्ठसाम्नामन्यतमद्बहिष्पवमानं कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि । १२ । पयोव्रतता शाकभक्षता फलभक्षता प्रसृतियावको हिरण्यप्राशनं घृतप्राशनं सोमपानमिति मेध्यानि । १३ । सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थानि ऋषिनिवासगोष्ठपरिष्कन्धा इति देशाः । १४ । ब्रह्मचर्यं सत्यवचनं सवनेषूदकोपस्पर्शनमार्द्रवस्त्रताधःशायितानाशक इति तपांसि । १५ । हिरण्यं गौर्वासो ऽश्वो भूमिस्तिला घृतमन्नमिति देयानि । १६ । संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेक-

श्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहो ऽहोरात्र इति कालाः । १७ । एतान्येवानादेशे विकल्पेन क्रियेरन् । १८ । एनःसु गुरुषु गुरूणि लघुषु लघूनि । १९ । कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम् । २० ।

॥ इति गौतमीये धर्मशास्त्र एकोनविंशो ऽध्यायः ॥ १९ ।

त्यजेत्पितरं राजघातकं शूद्रयाजकं शूद्रार्थयाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिः सह संवसेदन्त्यावसायिन्याम् । १ । तस्य विद्यागुरून्योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः । २ । पात्रं चास्य विपर्यस्येयुः । ३ । दासः कर्मकरो वावकरादमेध्यपात्रमानीय दासीघटात्पूरयित्वा दक्षिणामुखः पदा विपर्यस्येदमुमनुदकं करोमीति नामग्राहम् । ४ । तं सर्वे ऽन्वालभेरन्प्राचीनावीतिनो मुक्तशिखाः । ५ । विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन् । ६ । अप उपस्पृश्य ग्रामं प्रविशन्ति । ७ । अत ऊर्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन्सावित्रीमज्ञानपूर्वम् । ८ । ज्ञानपूर्वं चेत्त्रिरात्रम् । ९ । यस्तु प्रायश्चित्तेन शुध्येत्तस्मिञ्छुद्धे शातकुम्भमयं पात्रं पुण्यतमाद्ध्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुः । १० । अथास्मै तत्पात्रं दद्युस्तत्प्रतिगृह्य जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामीति । ११ । एतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयात । १२ । हिरण्यं ब्राह्मणाय दद्याद्गां वा । १३ । आचार्याय च । १४ । यस्य तु प्राणान्तिकं प्रायश्चित्तं मृतः शुध्येत् । १५ । सर्वाण्येव तस्मिन्नुदकादीनि प्रेतक-

र्माणि कुर्युः । १६ । एतदेव शान्त्युदकं सर्वेषूपपातकेषूपपातकेषु । १७ ।

॥ इति गौतमीये धर्मशास्त्रे विंशतितमो ऽध्यायः ॥ २० ॥

ब्रह्महा सुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः १। पातकसंयोजकाश्च । २ । तैश्चाब्दं समाचरन् । ३ । द्विजातिकर्मभ्यो हानिः पतनम् । ४ । परत्र चासिद्धिः । ५ । तमेके नरकम् । ६ । त्रीणि प्रथमान्यनिर्देश्यानि मनुः । ७ । न स्त्रीष्वगुरुतल्पः पततीत्येके । ८ । भ्रूणहनि हीनसेवायां च स्त्री पतति । ९ । कौटसाक्ष्यं राजगामि पैशुनं गुरोरनृताभिशंसनं पातकसमानि । १० । अपाङ्क्त्यानां प्राग्दुर्वालाद्गोहन्तृब्रह्मोज्झतन्मन्त्रकृदवकीर्णिपतितसावित्रीकेषूपपातकम् । ११ । अज्ञानाध्यापनादृत्विगाचार्यौ पतनीयसेवायां च हेयौ । १२ । अन्यत्र हानात्पतति । १३ । तस्य च प्रतिग्रहीतेत्येके । १४ । न कर्हिचिन्मातापित्रोरवृत्तिः । १५ । दायं तु न भजेरन् । १६ । ब्राह्मणाभिशंसने दोषस्तावान् । १७ । द्विरनेनसि । १८ । दुर्बलहिंसायां चाविमोचने शक्तश्चेत् । १९ । अभिक्रुद्धावगोरणे ब्राह्मणस्य वर्षशतमस्वर्ग्यम् । २० । निघाते सहस्रम् । २१ । लोहितदर्शने यावतस्तत्प्रस्कन्द्य पांसून्सङ्गृह्णीयात्सङ्गृह्णीयात् । २२ ।

॥ इति गौतमीये धर्मशास्त्र एकविंशो ऽध्यायः ॥ २१ ॥

प्रायश्चित्तम् । १ । अग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य । २ । लक्ष्यं वा स्याज्जन्ये शस्त्रभृताम् । ३ । खट्वाङ्गकपालपा-

णिर्वा द्वादश संवत्सरान्ब्रह्मचारी भैक्षाय ग्रामं प्रविशेत्कर्माच-क्षाणः ।४। पथो ऽपक्रामेत्सन्दर्शनादार्यस्य ।५। स्थानासनाभ्यां विहरन्सवनेषूदकोपस्पर्शी शुध्येत् ।६। प्राणलाभे वा तन्निमित्ते ब्राह्मणस्य । ७ । द्रव्यापचये वा ऋवरं प्रतिराद्धः । ८ । अश्व-मेधावभृथे वा । ९ । अन्ययज्ञे ऽप्यग्निष्टुदन्तश्चेत् । १० । सृष्ट-श्चेद्ब्राह्मणवधे ऽहत्वापि । ११ । आत्रेयीं चैवम् । १२ । गर्भे चाविज्ञाते ब्राह्मणस्य ।१३। राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्म-चर्यमृषभैकसहस्राश्च गा दद्यात् । १४ । वैश्ये त्रैवार्षिकमृषभै-कशताश्च गा दद्यात् । १५ । शूद्रे संवत्सरमृषभैकादशाश्च गा दद्यात् । १६ । अनात्रेय्यां चैवम् । १७ । गां च वैश्यवत् । १८ । मण्डूकनकुलकाकबिम्बदहरमूषिकश्वहिंसासु च । १९ । अस्थन्वतां सहस्रं हत्वा । २० । अनस्थिमतामनडुद्भारे च । २१ । अपि वास्थन्वतामेकैकस्मिन्किञ्चित्किञ्चिद्दद्यात् । २२ । षण्ढे पलालभारः सीसमाषश्च । २३ । वराहे घृतघटः । २४ । सर्पे लोहदण्डः ।२५। ब्रह्मबन्ध्वां चलनायां जीलः । २६ । वैशि-केन किञ्चित् । २७ । तल्पान्नधनलाभवधेषु पृथग्वर्षाणि ।२८। द्वे परदारे । २९ । त्रीणि श्रोत्रियस्य । ३० । द्रव्यलाभे चोत्सर्गः । ३१ । यथास्थानं वा गमयेत् । ३२ । प्रतिषिद्धमन्त्रयोगे सह-स्रवाकश्चेत् ।३३। अग्न्युत्सादिनिराकृत्युपपातकेषु चैवम् ।३४। स्त्री चातिचारिणी गुप्ता पिण्डं तु लभेत । ३५ । अमानुषीषु गोवर्जं स्त्रीकृते कूष्माण्डैर्घृतहोमो घृतहोमः । ३६ ।

॥ इति गौतमीये धर्मशास्त्रे द्वाविंशो ऽध्यायः ॥ २२ ॥

सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शु-

ध्येत् । १ । अमत्या पाने पयो घृतमुदकं वायुं प्रतित्र्यहं तप्तानि स कृच्छ्रस्ततो ऽस्य संस्कारः । २ । मूत्रपुरीषरेतसां च प्राशने । ३ । श्वापदोष्ट्रखराणां चाङ्गस्य । ४ । ग्राम्यकुक्कुटसूकरयोश्च । ५ । गन्धाघ्राणे सुरापस्य प्राणायामा घृतप्राशनं च । ६ । पूर्वैश्च दष्टस्य । ७ । तप्ते लोहशयने गुरुतल्पगः शयीत । ८ । सूर्मिं वाश्लिषेज्ज्वलन्तीम् । ९ । लिङ्गं वा सवृषणमुत्पाट्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममा शरीरनिपातात् । १० । मृतः शुध्येत् । ११ । सखिसयोनिसगोत्राशिष्यभार्यासु स्नुषायां गवि च तल्पसमः । १२ । अवकर इत्येके । १३ । श्वभिः खादयेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशम् । १४ । पुमांसं खादयेत् । १५ । यथोक्तं वा । १६ । गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत । १७ । तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान्भैक्षं चरेत्कर्माचक्षाणः । १८ । संवत्सरेण शुध्येत् । १९ । रेतःस्कन्दने भये रोगे स्वप्ने ऽग्नीन्धनभैक्षचरणानि सप्तरात्रमकृत्वाज्यहोमः समिधोर्वा रेतस्याभ्याम् । २० । सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानो ऽभ्यस्तमितश्च रात्रिं जपन्सावित्रीम् । २१ । अशुचिं दृष्ट्वादित्यमीक्षेत प्राणायामं कृत्वा । २२ । अभोज्यभोजने ऽमेध्यप्राशने वा निष्पुरीषीभावः । २३ । त्रिरात्रावरमभोजनम् । २४ । सप्तरात्रं वा स्वयंशीर्णान्युपयुञ्जानः फलान्यनतिक्रामन् । २५ । प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च । २६ । आक्रोशानृतहिंसासु त्रिरात्रं परमं तपः । २७ । सत्यवाक्ये वारुणीभिर्मानवीभिर्होमः । २८ । विवाहमैथुननर्मार्तसंयोगेष्वदोषमेके ऽनृ-

तम् । २९ । न तु खलु गुर्वर्थेषु । ३० । यस्मात्सप्त पुरुषानितश्च परतश्च हन्ति मनसापि गुरोरनृतं वदन्नल्पेष्वप्यर्थेषु । ३१ । अन्त्यावसायिनीगमने कृच्छ्राब्दः । ३२ । अमत्या द्वादशरात्रः । ३३ । उदक्यागमने त्रिरात्रस्त्रिरात्रः । ३४ ।

॥ इति गौतमीये धर्मशास्त्रे त्रयोविंशो ऽध्यायः ॥ २३ ॥

रहस्यं प्रायश्चित्तमविख्यातदोषस्य । १ । चतुर्ऋचं तरत्समन्दीत्यप्सु जपेदप्रतिग्राह्यं प्रतिजिघृक्षन्प्रतिगृह्य वा । २ । अभोज्यं बुभुक्षमाणः पृथिवीमावपेत् । ३ । ऋत्वन्तरारमण उदकोपस्पर्शनाच्छुद्धिमेके । ४ । एके स्त्रीषु । ५ । पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेकभक्तिको जलक्लिन्नवासा लोमानि नखानि त्वचं मांसं शोणितं स्नाय्वस्थि मज्जानमिति होम आत्ममुखे मृत्योरास्ये जुहोमीत्यन्तः सर्वेषां प्रायश्चित्तं भ्रूणहत्यायाः । ६ । अथान्यत् । ७ । उक्तो नियमः । ८ । अग्ने त्वं पारयेति महाव्याहृतिभिर्जुहुयात्कूष्माण्डैश्चाज्यम् । ९ । तद्व्रत एव वा ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषु प्राणायामैस्तान्तो ऽघमर्षणं जपेत्सममश्वमेधावभृथेन । १० । सावित्रीं वा सहस्रकृत्व आवर्तयन्पुनीते हैवात्मानम् । ११ । अन्तर्जले वाघमर्षणं त्रिरावर्तयन्सर्वपापेभ्यो मुच्यते मुच्यते । १२ ।

॥ इति गौतमीये धर्मशास्त्रे चतुर्विंशो ऽध्यायः ॥ २४ ॥

तदाहुः कतिधावकीर्णी प्रविशतीति । १ । मरुतः प्राणैरिन्द्रं बलेन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेणेति । २ । सो ऽमावास्यायां निश्यग्निमुपसमाधाय प्रायश्चित्ताज्याहुती

जुहोति ।३। कामावकीर्णो ऽस्म्यवकीर्णो ऽस्मि काम कामाय स्वाहा। कामाभिद्रुग्धो ऽस्म्यभिद्रुग्धो ऽस्मि काम कामाय स्वाहेति समिधमाधायानुपर्युक्ष्य यज्ञवास्तु कृत्वोपोत्थाय सं मा सिञ्चन्त्वित्येतया त्रिरुपतिष्ठेत् । ४। त्रय इमे लोका एषां लोकानामभिजित्या एषां लोकानामभिक्रान्त्या इति । ५ । एतदेवैकेषां कर्माधिकृत्य यो ऽपूत इव स्यात्स इत्थं जुहुयादित्थमभिमन्त्रयेत वरो दक्षिणेति प्रायश्चित्तमविशेषात् । ६ । अनार्जवपैशुनप्रतिषिद्धाचारानाद्यप्राशनेषु शूद्रायां च रेतः सिक्त्वायोनौ च दोषवति कर्मण्यभिसन्धिपूर्वे ऽप्यब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिरन्यैर्वा पवित्रैः । ७ । प्रतिषिद्धवाङ्मनसापचारे व्याहृतयः पञ्च । ८ । सर्वास्वपो वाचामेदहश्च मादित्यश्च पुनात्विति प्रातः रात्रिश्च मा वरुणश्चेति सायम् । ९ । अष्टौ वा समिध आदध्याद्देवकृतस्येति हुत्वैव सर्वस्मादेनसो मुच्यते मुच्यते । १० ।

॥ इति गौतमीये धर्मशास्त्रे पञ्चविंशो ऽध्यायः ॥ २५ ॥

अथातस्त्रीन्कृच्छ्रान्व्याख्यास्यामः । १ । हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयात् । २ । अथापरं त्र्यहं नक्तं भुञ्जीत । ३ । अथापरं त्र्यहं न कञ्चन याचेत । ४ । अथापरं त्र्यहमुपवसेत् । ५ । तिष्ठेदहनि रात्रावासीत क्षिप्रकामः । ६ । सत्यं वदेत् । ७ । अनार्यैर्न सम्भाषेत । ८ । रौरवयौधाजये नित्यं प्रयुञ्जीत । ९ । अनुसवनमुदकोपस्पर्शनमापो हि ष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत हिरण्यवर्णा इत्यष्टाभिः । १० ।

